सम्पुटिः-०१ सञ्चिका-८

सप्तगिरि अनुबन्धम्

तिरुमलतिरुपतिदेवस्थानानि

# बालसप्तगिरिः

## अक्टोबर् -२०२०

## विषयसूचिका



मुखचित्रम् – आनन्दनिलयः

अन्तिमरक्षापुटः – सरस्वती अलङ्कारे श्रीपद्मावतीमाता

# आनन्दनिलयम्

- सि.आदिलक्ष्मीः

स्वयम्भुवः श्रीवेङ्कटेश्वरः कलियुगप्रत्यक्षदैवः तिरुमलक्षेत्रे विराजते। अस्यक्षेत्रस्य संदर्शमानानां भक्तानां वाञ्छितेप्सितानां प्रदाता अभयप्रदाता श्रीनिवासः।

तिरुमलेशस्य बहूनि नामानि सन्त्यपि ‘आनन्दनिलयवासः’ इति नाम प्रत्यक्षरं सार्थकं प्राप्य रराजते। ‘तिरुमलयात्राप्रारम्भः’ एव एकः आनन्दः। सप्तगिरिषु विहारः अवर्णनीयानन्दः। ब्रह्माण्डनायकस्य सुवर्णधामं आनन्दनिलयं नेत्रपर्वतया सन्दर्शनेन एकं दिव्यानन्दं भवति। तदानन्दनिलयान्तर्भागे स्थित्वा, सदा भक्ताननुग्रहीतुः निरीक्ष्यमानं



सप्तगिरिवासिनं दर्शनं परमानन्दम्। अव्यक्तानन्दपरम्पराऽयं दर्शितस्य प्रतिभक्तस्य भवति। दर्शनं प्रतिवारं प्राप्नोति च।

श्रीमहाविष्णुः लोककल्याणार्थं भक्तानां कृते वैकुण्ठं त्यक्त्वा तिरुमलक्षेत्रे 'वेङ्कटेश्वरः' इति नाम्ना विराजितः वर्तते। श्रीवेङ्कटेश्वरः तोण्डमानचक्रवर्तिः निर्मितानन्दनिलये प्रवेशितदिनादारभ्य भक्तानां ईप्सितवरदायकत्वेन प्रत्यदेवः सेवितः वर्तते। एवं प्रतिभक्तं, प्रतिक्षणम् आनदाब्धौ स्नापितं वेङ्कटाद्रिं 'आनन्दाचलमिति' स्वामिनः सुवर्णगोपुरस्य 'आनन्दनिलयमिति' तत्र विराजमानं स्वामिनं 'आनन्दनिलयवासः' इति प्रसिद्ध नामानि ख्यातिर्गतानि।

**आनन्दजनकत्त्वात्तं आनन्दनिलयं विदुः।**
**वरपद्मासने सुस्थां विधाय कमलालयम्।।**

पहमसीना वक्षःस्थले माहलक्ष्यास्सहितः साक्षात् वैकुण्ठवासः श्रीवेङ्कटेश्वरः प्रत्यक्षतया अवतरितः भूलोकवैकुण्ठम्। अयं दिव्यस्थलं दर्शनानन्तरं अव्यक्तानन्दंसिद्धिर्भवति। अत एव इयं आनन्दनिलयम् प्रसिद्धिः प्राप्तः।

अयं सुवर्णविमानेन साकं, तत्र विमाने स्थितं श्रीनिवासदर्शनं सर्वजीवपापानि नाशयन्ति।

सर्वयुगेषु समस्तानां सकलविधपरमाद्भुतानन्दप्रसादकं, इच्छावरदायकं, निरन्तरं निरन्तरायतया भक्तानामकर्षितक्षेत्रं वेङ्कटाचलम्।

प्रसिद्धिर्गतानन्दाचलोपरि 'अयं आनन्दनिलय सन्दर्शनेन भक्ताः सर्वाभीष्टाः प्राप्नुवन्ति।



द्वादश सूरयः

# श्रीभक्ताङ्घ्रिरेणुसूरिवैभवम्

-डा.केशवप्रपन्न पान्डे

**धनुषिज्येष्ठनक्षत्रे मण्डङ्गुडिपुरोद्भवम्।
चोळोर्व्यां वनमालांशं भक्तपद्रेणुमाश्रये।।**



अथ भगवान् भक्ताङ्घ्रिरेणुः चोळमण्डळे, तिरुमण्डङ्गुडिनामके ग्रामे, प्रभवनाम्नि संवत्सरे, ज्येष्ठाख्यायां तारकायाञ्च, भगवतो नारायणस्य वैजयन्त्याः अंशभूतः, धरायामस्यां विप्रनारायणनाम्ना विप्रोत्तमकुले अवततार। भगवतः निर्हेतुककटाक्षवीक्षणेन बाल्यादेव भक्तिज्ञानवैराग्ययुत आसीत्। सूरिरयं यथाकालं यथाविधि पित्रा चौळोपनयनाभ्यां सुसंस्कृतः, तत अचिरादेव स्वकुशाग्रयबुद्ध्या निखिलवेदवेदाङ्गपारङ्गतो बभूव। महात्मायं भगवति श्रीमन्नारायणदिव्यचरणारविन्दयोरेव सदा अनुरक्तो भवति, तदितराणि सर्वाणि वस्तूनि तृणाय मन्यते, अतः प्राप्तयौवनोऽपि नोद्वाहं चकार। कदाचित् श्रीरङ्गं प्रस्थाय तत्र मन्दिरोर्ध्वभागस्थं प्रणवाख्यं विमानं संसेव्य, ततो भगवतो रङ्गनाथस्य द्वियमङ्गलविग्रहञ्च महदानन्देन द्रवितहृदयः सेवते। तदा तस्य सौशील्यादिगुणैराकृष्टः,

तदा प्रभृति तत्रैव श्रीरङ्गे नित्यवासं कुर्वन् सुखम् आस्ते। मुनिरयमपि पुरा भगवतः कृष्णावतारसमये मथुरायां भक्तशिरोणिना मालाकारेण भगवन्तं श्रीकृष्णं समाराधयितुं कृतं पुष्पमालाकैङ्कर्यं संस्मृत्य, ततः प्रभृति तदेय कैङ्कर्यं वरमिति निश्चित्य, एकं रम्यं नन्दवनञ्च निर्माय नित्यं भगवते रङ्गनाथाय पुष्पामालार्पणं करोति स्म। समयान्तरेषु च भगवत असंख्येयकल्याणगुणगणांश्च अनुभवति स्म।

एवं स्थिते कदाचिद् देवदेवी नाम्ना प्रसिद्धा काचित् वराङ्गना मुनेरस्य जीवने प्रवेशं करोति। सा कथञ्चित् परमवैराग्यसम्पन्नं सवशं कर्तुं प्रयतते नाम। परं स तस्या उपरि दृष्टिम् अपातयन्, नित्यं भगवन्तमेवानुस्मरन् स्वकैङ्कर्यादिकं यथावत् निर्वर्तयति स्म अयं मुनिः। तदा सा देवदेवी कथञ्चिद् उपायन्तरेण छलेन वा तं वशीकर्तुकामा वैष्णवस्त्रीव वेषं धृत्वा, स्वयमपि तेन सह पुष्पकैङ्कर्ये नियोजयति स्म। तस्याः भगवत्प्रीतिं पुष्पकैङ्कर्ये च महतीं श्रद्धां दृष्ट्वा तत्सत्यमिति मन्यमानः, मुदितहृदयः स तां तदनुवर्तितुम् अनुमन्यते स्म। परं कालान्तरे तत्कृतच्छलेन हावभावेन च तद्वशीभूय, स्वीयवर्णाश्रमधर्मानपि शनैः शनैः जहाति। भगवत्कैङ्कर्यादिकं विस्मृत्य तस्या वराङ्गनायाः सौन्दर्यमेव समाराधयन्नास्त। एवमेव बहुकालम् अत्यवाहच्च।

परमेकदा कारुण्यरूपायाः लोकजनन्याः श्रियः प्रार्थनया, भगवान् रङ्गनाथः स्वपूर्वभक्तस्य दयनीयां स्थितिं दृष्ट्वां, तमनुग्रहीतुकामः, तस्माद् भ्रष्टपथाद् उद्धृत्य, पुनः स्वसेवायां नियोज्य अनुग्रृह्णाति स्म। विप्रनारायणस्तु स्वाज्ञानतायाः पराकाष्ठां स्मारं स्मारं भृशं परितप्य, ततः प्रायश्चित्तरूपेण भगवद्भक्तपादोदकं निपेव्य निष्कल्मषो बभूव। ततः प्रभृति **भक्ताङ्घ्रिरेणुः** इति अन्वर्थनाम्ना प्रसिद्धश्च अभवत्। अयन्तु महात्मा **''तिरुमाळै''** **''तिरुप्पळ्ळियेळुच्चि''** इति सकलतत्त्वार्थबोधकं अप्रतिमदिव्यप्रबन्धद्वयं सकलचेतनानाम् उज्जीवनाय अनुजग्राह।



# गोपालदासः

- विद्वान् वि.प्रदीप् कुमारः

कर्णाटकराज्ये रायचूर् परिसरप्रान्तेषु देवदुर्ग इति ग्रामस्य समीपे मोसरुकल्लु इति ग्रामे वेङ्कम्म-मुरारिरायरु इति दम्पती आस्ताम्। तयोः भागण्ण इति नामकः पुत्रः आसीत्। भागण्णस्य त्रयः अनुजाः आसन्। ते च रङ्गप्प, सीनप्प, दासप्प इति। तिरुमलवेङ्कटेश्वरः एतेषां गृहदेवता। भागण्णः हरितसगोत्रोद्भवः। अस्य बाल्ये एव पिता मुरारिरायः पञ्चत्वं प्राप। निराश्रयाः माता-पुत्राः ततः सङ्कापुर इति ग्रामान्तरं प्रतिगताः। तत्रापि आश्रयमलभमानाः एते सीमाप्रदेशे विद्यमाने आञ्जनेयस्वामिनः मन्दिरे ऊषुः। किन्तु कुत्रापि आश्रयाभावात् मातुः पुत्राणां पालनं कष्टतरं जातम्। तेन भागण्णः धनार्जनं करणीयमिति चिन्तितवान्। वातवृक्षस्याधः वर्षद्वयात्मकं कालं गायत्रीमन्त्रजपं कृतवान्। गायत्रीमन्त्रसिद्ध्या असौ भूत-भविष्य-वर्तमानकालान् जानाति स्म। एवं जनानां भविष्यकथनेन जनानुरागं सम्पादितवान्। भागण्णस्य कवितारचनासामर्थ्यमपि आसीत्। एवं पुत्रस्य उन्नतिकारणात् मातुः कष्टाः क्रमेण क्षीणाः



सञ्जाताः। सङ्कापुरग्रामतः एते उत्तनूरु इति ग्रामं जग्मुः। तत्र भागण्णः दासश्रेष्ठं विजयदासं दृष्टवान्। विजयदासः  तस्मै गोपालविठल इति नामाङ्कितं प्रदत्तवान्। तेन नाम्ना गोपालदासः १००० कीर्तनानि व्यरचयत्। गोपालदासस्य वेङ्कटकृष्ण इत्यपि अङ्कितनाम आसीत् इति अभिप्रयन्ति। तत्र प्रमाणं अनुपलब्धमस्ति। गोपालदासस्य अनुजाः अपि तामेव वृत्तिं स्वीकृताः गीतान्यरचयन्। गोपालदासस्य शिष्यवर्गेषु **'ऐजि वेङ्कटरामाचार्यः, हेळवनकट्टे गिरियम्म, दासप्प (गुरुगोपाल विठल)''** इत्येते प्रमुखाः आसन् गुरूणां विजयदासानां आज्ञानुसारं गोपालदासः स्वकीयं चत्वारिंशद्वर्षाणामायुः ''जगन्नाथदासाय'' दत्वा तम् उपाकरोत्। एवमेव गोपालदासः **पङ्गनाम तिम्मण्णय्य** इत्येनं अपमृत्युना रक्षितवन्तः।स्वशिष्यैः मध्यरात्रौ सूर्यदर्शनं कारितवन्तः। वैष्णवानां साहाय्यार्थं गोपालदासाः दारिद्र्यपरिहारसुळादि विरचय्य उपकरोत्। आशुकवितारचनासु निष्णातः असौ श्रीमदुत्तरादिमठस्य संस्थानाधीशानां सत्यबोधतीर्थानां अनुग्रहपात्रः आसीत्। **''रथवनेरिद चन्द्र राघवेन्द्र, कोट्ट बिदरन्ति एष्टुदिन, वैराग्य सर्ग केळु''** इत्यादीनि गोपालदास्य प्रसिद्धानि गीतानि। एवं महिमान्वितः असौ गोपालदासः गणपत्यंशसंभूतः इति वदन्ति। हरिदासवर्गे **दासचतुष्टयेषु एकः असौ गोपालदासः।**

**''भूपालनतपादाब्जं पापालिहरिपारिणम्।**
**गोपालदासमीडेऽहं गोपालहरिदर्शनम्।।**

इति तेषां चरमश्लोकः।।



चित्रकथा

# तुम्बिमान् कोण्ड्याः मोक्षः

तेलुगु मूलम् - श्रीनिवासादीक्षितुलु
संस्कृतानुवादः- सुजाता मुनुकुट्ल
चित्रम्- के. द्वारकानाथ्

१. यदा श्रीरामानुजाचार्याः एकवर्षपर्यन्तं तिरुपतौ आसन् तदा तुम्बिमान् कोण्डी इति काचित् स्त्री प्रतिदिनं तेषां कृते अपेक्षितं क्षीरं, दधि, घृतं च समर्पितवती। अतः तदर्थं धनं दातुं ताम् आहूतवन्तः श्री रामानुजाचार्याः।

मातः। एतावन्ति दिनानि क्षीरं, दधि, घृतं च दत्तवती किल तदर्थं धनं स्वीकरोतु।

स्वामिन्! मह्यं एतदु विधं धनं नोपक्षितम्।



२. तर्हि किं धनम् अपेक्षितम्।?

३. मह्यं मोक्षधनम् अपेक्षितम्। तत् ददतु।




४. मोक्षधनं वा... तद् मम समीपे अस्ति इति कैरुक्तम्?


५. भवन्तः चीटिकां लिखित्वा ददति चेत् पर्याप्तम्ः श्रीनिवासः मह्यं मोक्षं प्रदास्यति।


६. किं लेखनीयम्?


अस्याः मोक्षं दद्युः इति धृढरूपेण चीटिकायां लिखित्वा ददतु। तदेव अलम्।

७. ओं.... लिखित्वा ददामि चेत् तां चीटिकां किं करिष्यसि?

तां चीटिकां स्वीकृत्य गिरिमधिरुह्य स्वामिनः कृते दर्शयिष्यामि। तद् दृष्ट्वा सः निश्चयेन मह्यं मोक्षं दास्यति।



८. तस्यः विश्वासं दृष्ट्वा श्रीरामानुजाचार्याः आनन्दितवन्तः।

अस्तु.... तथैव विलिख्य ददामि।



९. तुम्बिमान् कोण्डी महती भागवतसेवां कृतवती। अतः अस्याः कृते मोक्षम् अनुगृह्णन्तु स्वामिन्! इति चीटिकायां विलिख्य तस्यै दत्तवन्तः श्री रामानुजाचार्याः।

आर्याः! कृतज्ञाहम्।












आगामि सञ्चिकायां
श्रीवेङ्कटेश्वरस्वामिनः अपरदिव्यलीलानाम् आनन्दम्  अनुभवेम।

स्वस्ति।

# लोभः अनर्थानाम्

- मंगिपूडि कामेश्वररावः



पूर्वकाले एकस्मिन् अरण्ये कर्पूरतिलकः नाम एकः गजः निवसति स्म। तस्य गजस्य पीनं शरीरं दृष्ट्वा केचन श्रृगालाः एवं अचिन्तयन् अयम् तु गजः पीनः पृथुलश्च। यदि वयम् एनम् केनापि प्रकारेण वञ्चयित्वा, अस्य संहारं कुर्मः चेत् अस्माकं चुतर्णां मासानां कृते आहारं मिलिष्यति इति। एतत् कथं साधनीयम्?इति आलोचयन्ती। तदानीं एकः वृद्धः श्रृगालः अस्य गजस्य मरणं मया मम बुद्धिबलेन साधयितव्यम् इति चिन्तयित्वा झटिति गजस्य समीपं गत्वा प्रणम्य एवम् उक्तवान्। हे गजोत्तम! गजश्रेष्ठ! अस्मिन् अरण्ये स्वामिना विना अस्माभिः न स्थातव्यम्''। इति सर्वे परावः चिन्तयन्ति। भवांस्तु

सर्वस्वामिगुणसम्पन्नः। अतः भवानेव अस्य वनस्य राजा भवितुं अर्हति'' इति सः वञ्चकः श्रृगालः अवदत्। गजः तस्य वञ्चकस्य वचनानि श्रुत्वा आनन्देन हे श्रृगाल! न खलु चिन्तयन्नपि निपुणं तम् आत्मनः गुणम् अवलोकयामि यस्य अयम् अनुरूपः अनुग्रहातिरेकः। तथा उदारजनाःदरः बहुमानम् आरोपयति अवश्यं तत् अनुगृहीतः अस्मि अनया सम्भावनया वनवासिनाम्''। अतः मह्यं राज्याभिषेकमण्डलमार्गं आदेशय'' इत्यवदत्। यः वञ्चकः श्रृगालः अपि तम् राज्यलोभाकृष्टं गजं एकेन मार्गेण नयति स्म। गजोऽपि जवन श्रृगालं अनुसरन् महापङ्के निपतितः। गजः दन्त हस्ताग्र लांगूल पादचालनेन तस्मात् पङ्कात् बहिः आगन्तुं यथा प्रयतते स्म तथा गहनतरे पङ्के अवसीदत्। तदा गजः दीर्घं निःश्वसन् - हे मित्र! श्रृगाल! क्षणकालं प्रतिपालय माम्। पश्य! पश्य! अहं महापङ्के निमग्नः। त्वमेव इदानीं मम उत्तारः। अपि च अहं प्राणसंशयं आपन्नः अस्मि''। इति अवदत्। सः श्रृगालः तदा हर्षेण मनसा स्वं अभिनन्दन् - हे देव! गजश्रेष्ठ! आगच्छामि अहम्। भयं माऽस्तु। मम पुच्छकावलम्बनं कृत्वा उत्तिष्ठ बहिः आगच्छ। इति उवाच। अनन्तरं सः गजः मृतः तस्मिन् एव पङ्के। ततः राज्यलोभाकृष्टस्य गजस्य मांसं उत्कृत्य सर्वे श्रृगालाः बहूनि दिनानि अभक्षयन्। एवं अत्र गजः राजा भवितुं नार्हः अपि दुराशया मृतः। अस्यां कथायां नीतिः लोभो मूलं अनर्थानाम् इति ज्ञातव्या अस्माभिः''।





# विशिष्ट बालिका

बालिकायाः नाम : - टि.एम्.पर्वतवर्धिनि
जननं : - १२.०५.२००६
पठिता कक्ष्या : - ९
पाठशालायाः नाम : - स्फिंग् डेल् पब्लिक् स्कूल् करकंबाडि रोड्, तिरुपतिः
मातुः नाम : - श्रीमति.टि.भवानी
पितुः नाम : - श्री टि.एस्.महेन्द्र कुमारः

**प्राप्ताः पुरस्काराः**

२०१७-२०१८ - भगवद्गीता स्पर्धायां (जिल्ला) द्वितीय पुरस्कारः 'स्पेल् बी' स्पर्धायां - प्रथम पुरस्कारः

२०१८-२०१९ - जिल्लायां भगवद्गीता स्पर्धायां प्रथम पुरस्कारः 'उच्चारणाभिव्यक्तता' स्पर्धायां - प्रथम पुरस्कारः 'गणित मेरधान्' स्पर्धायां-प्रथम पुरस्कारः सम्यक् हस्तलिखितस्पर्धायां प्रथमः'' विविध विभागेषु प्रश्नोत्तरकार्यक्रमे - प्रथम पुरस्कारः

२०१९ - २०२० भगवद्गीता स्पर्धायां द्वितीय पुरस्कारः, उच्चारणाभिव्यक्तिकरणे - प्रथम पुरस्कारः, इस्कान् मौखिकस्पर्धायां प्रथमपुरस्कारः चित्रकलास्पर्धायां - द्वितीय पुरस्कारः 'तेलुगुमध्ये सम्भाषणम्' - तृतीय पुरस्कारः

**प्रतिभायाः लेखनं पुरस्कारः**

क्रीडास्पर्धा- धावन स्पर्धा-प्रथमपुरस्कारः, राक्पत्रं एवं सिजरस्क्रीडा स्पर्धायां - प्रथमपुरस्कारः, प्रत्येक प्रतिभा - नाट्यसङ्गीतञ्च

१. कालिका दुर्गालये बेङ्गलूरनगरे नृत्यप्रदर्शनम्
२. शिल्पारामे तिरुपतिनगरे नृत्यप्रदर्शनम्
३. तिरुपतौ कार्तिकदीपोत्सवे नाट्यप्रदर्शनम्
४. तिरुपतिनगरपुरपालकसङ्घपक्षतः निर्वहित 'बालाः दिनोत्सवे नाट्यप्रदर्शनम्।

# रसप्रश्नाः

- एन्. उमादेवी



१. प्रतिसंवत्सरं श्री स्वामिनः ब्रह्मोत्सवः कदा प्रचलति?

अ. श्रावण मासे  आ. भाद्रपदमासे

इ. आश्वयुजमासे  ई. कार्तीकमासे

२. पूर्वकाले ब्रह्मोत्सवः केन आरब्धः?

अ. ब्रह्मदेवेन  आ.इन्द्रेण

इ. महेश्वरेण  ई. वरुणेन

३. ब्रह्मोत्सवेषु सकलदेवताह्वानं कः करोति?

अ. अग्निः आ. इन्द्रः इ. विष्वक्सेनः ई. चन्द्रः

४. ब्रह्मोत्सवेषु मृत्संग्रहणं अर्चकाः कस्मिन् प्रदेशे स्वीकुर्वन्ति?

अ. कल्याणमण्डपे  आ. वसन्तमण्डपे

इ. महन्तुमण्डपे  ई. अयनमण्डपे

५. ब्रह्मोत्सवेषु प्रसिद्ध वाहनम् किम्?

अ. गजवाहनम्  आ. सूर्यप्रभवाहनम्

इ. अश्ववाहनम्  ई. गरुडवाहनम्

६. ब्रह्मोत्सवेषु चक्रस्नानं कुत्र आचरन्ति?

अ. स्वामिपुष्करिणी  आ. आकाशगङ्गा

इ. पापविनाशनम्  ई. गोगर्भम्

७.ब्रह्मोत्सवेषु ध्वजावरोहणम् अर्चकाः कुत्र कुर्वन्ति?

अ.देवालय बहिःप्रदेशे  आ.श्री स्वामिनः आलये

इ. पुष्करिणी समीपे  ई. आस्थान मण्डपे

उत्तराणि: १.इ २.अ ३.इ ४.आ ५.ई ६.अ ७.आ

# चित्रलेखनम्

अस्य चित्रपटस्य रञ्जितं कुर्मः वा?



उपरि चित्रपटस्य अधो निर्दिष्ट प्रदेशे स्थापयामेव।







बालबालिकानां पौराणिक वेषधारणम्।



SAPTHAGIRI (SANSKRIT) ILLUSTRATED MONTHLY
Published by Tirumala Tirupati Devasthanams
printing on 25-09-2020.

श्री सरस्वतीदेव्याः अलंकारे
श्रीपद्मावतीमाता